(५।२।४८) इति डट्। 'नान्तात्–' (५।२।४९) इति मट्। '**पञ्चमो** रागभेदे स्यात्स्वरभेदे च पञ्चमी। पाण्डवानां च, पत्न्यां स्त्री पञ्चानां पूरणे त्रिषु'। '**पञ्चमो** रुचिरे दक्षे' ॥(१) ॥*॥ अमी सप्त स्वरास्तन्त्रीतः कण्ठाच्चोच्चरन्ति। 'दारवी गात्रवीणा च द्वे वीणे स्वरधारिके' इति वचनात् वंशमुरजादयस्तु अनुकरणमात्रोपयोगिन इति भावः। नारदः– 'षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम्। अजाविकौ च गान्धारं क्रौञ्चो नदति मध्यमम् ॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्। अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः' इति '**स्वराणां पृथक्पृथक्**' एकैकम् ॥

**काकली तु कले सूक्ष्मे**

**काकलीति** ॥ ईषत्कलः काकली। 'ईषदर्थे च' (६।३।१०५) इति कोः कादेशः। गौरादित्वात् (४।१।४१) ङीष्। अन्ये तु—कलेः (भ्वा॰ आ॰ से॰) इन् (उ॰ ४।११८)। कलिः शब्द ईषदत्रेति **काकलिः**। ततः 'कृदिकारात्–' (ग॰ ४।१।४५) इति ङीष्। अत एव 'साधूदितं काकलिभिः कुलीनैः' इत्यभिनन्दप्रयोगः संगच्छते— इत्याहुः ॥ (१) ॥*॥ एकम् '**सूक्ष्मध्वनेः**' ॥

**ध्वनौ तु मधुरास्फुटे।**

**कलः**

**ध्वनाविति** ॥ मधुरः श्रुतिसुखः। स चासावस्फुटोऽव्यक्ताक्षरश्च। तादृशे ध्वनौ कलः। 'कड मदे' (भ्वा॰ प॰ से॰)। कडति माद्यत्यनेन। 'हलश्च' (३।३।१२१) इति घञ्। संज्ञापूर्वकत्वाद्वृद्ध्यभावः। डलयोरेकत्वस्मरणम्। यद्वा कलनम्। 'कल सङ्ख्याने' (भ्वा॰ आ॰ से॰)। 'खनो घ च' (३।३।१२५) इति घः। यद्वा कलते। पचाद्यच् (३।१।१३४)। '**कला** स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालमानयोः ॥ **कलं** शुके त्रिष्वजीर्णे नाव्यक्तमधुरध्वनौ' ॥ (१) ॥*॥ एकम् '**अव्यक्तमधुरध्वनेः**' ॥

**मन्द्रस्तु गम्भीरे.**[1]

**मन्द्र इति** ॥ गम्भीरे मेघादिध्वनौ। मन्दते। 'मदि स्तुत्यादौ' (भ्वा॰ आ॰ से॰) 'स्फायि–' (उ॰ २।१३) इति रक् ॥ (१) ॥*॥ एकम् '**गम्भीरशब्दस्य**' ॥

**तारोऽत्युच्चैः**

**तार इति** ॥ तारयति अतिक्रामत्यन्यान्शब्दान्। 'बहुलमेतन्निदर्शनम्' इति चुरादिगणसूत्रात्स्वार्थे णिच्। पचाद्यच् (३।१।१३४) ॥ (१) ॥*॥ एकम् '**उच्चशब्दस्य**' ॥

**त्रयस्त्रिषु ॥ २ ॥**

**त्रय इति** ॥ त्रयः कलमन्द्रताराः (त्रिषु विशेष्यनिघ्नाः)॥

**समन्वितलयस्त्वेकतालः**

**समन्वितेति** ॥ सम्यगन्वितो लयो नृत्यगीतवाद्यानां साम्यं यत्र स एकः समस्तालो मानमस्येत्येकतालः ॥ (१) ॥*॥ एकम् '**गीतवाद्यलयसाम्यस्य**' ॥

**वीणा तु वल्लकी।**

**विपञ्ची**

**वीणेति** ॥ वेति जायते स्वरोऽस्याम्। 'वी गत्यादिषु' (अ॰ प॰ अ॰) 'रास्नासास्ना–' (उ॰ ३।१५) इत्यादिना नप्रत्ययो णत्वं गुणाभावश्च निपातितः। '**वीणा** विद्युति वल्लक्याम्।' (१) ॥*॥ वल्लते। 'वल वल्ल संवरणे' (भ्वा॰ आ॰ से॰) क्वुन् (उ॰ २।३२)। गौरादित्वात् (४।१।४२) ङीष् ॥ (२) ॥*॥ विपञ्चयति विस्तारयति शब्दम्। 'पचि विस्तारे' (चु॰ प॰ से॰)। ण्यन्तादच् (३।१।१३४)। गौरादिः (४।१।४१)। 'विपञ्ची केलिवीणयोः' ॥ (३) ॥*॥ त्रीणि '**वीणायाः**' ॥

**सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥**

**सेति** ॥ सैव सप्तभिस्तन्त्रीभिरुपलक्षिता परिवदति स्वरान्। 'सुपि' (३।२।७८) इति णिनिः ॥ (१) ॥*॥ एकम् '**सतार इति ख्यातस्य**' ॥

**ततं वीणादिकं वाद्यम्**

**ततमिति** ॥ वीणादि यद्वाद्यं वादनीयम्। तत्ततम्।[2] आदिना सैरन्ध्रीरावणहस्तकिंनरादि तन्यते 'तनिमृङ्भ्यां किच्च' (उ॰ ३।८८) इति तन्। 'अथ **ततं** व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु सदागतौ' ॥ (१) ॥*॥ एकम् '**वीणादिवाद्यस्य**' ॥

**आनद्धं मुरजादिकम्।**

**आनद्धमिति** ॥ आनह्यते स्म मुखे चर्मणा बध्यते स्म। 'णह बन्धने' (दि॰ उ॰ अ॰)। क्तः (३।२।१०२)। 'नहो धः' (८।२।३४)। आदिपदात्पटहादि। '**आनद्धं** मुरजादौ च क्लीबं स्यात्संदिते त्रिषु' ॥ (१) ॥*॥ एकम् '**मुरजादिवाद्यस्य**' ॥

**वंशादिकं तु शुषिरम्**

**वंशेति** ॥ वंशो वेणुः। आदिपदात्काहलादि। शुषिश्छिद्रमस्यास्ति। 'ऊषशुषि–' (५।२।१०७) इति रः। '**शुषिरं** वंशादिवाद्ये विवरेऽपि नपुंसकम्। **शुषिरो** न स्त्रियां गर्ते, वह्नौ, रन्ध्रान्विते त्रिषु'। 'सूर्म्यं सुषिरामिव' (पस्पशाह्निकभाष्यस्थश्रुतौ) इति प्रयोगात् (**सुषिरम्**) दन्त्याद्यपि।

---

[1] १—मद्रोऽपि इति स्वामी ॥

[2] १—क्वचिन्मेदिनीपुस्तके तु 'मूषिके ना स्त्रियां नाल्पौषधौ रन्ध्रान्विते त्रिषु' इति पाठ उपलभ्यते ॥